॥ श्रीस्वामिनारायणो विजयतेतराम् ॥

# श्रीस्वामिनारायण-संस्कृतविद्याप्रतिष्ठानम्


## संचालक : स्वामी योगेश्वरदासजी

नव्यव्याकरणाचार्यः, नव्यन्यायाचार्यः, वेदांताचार्यः
(लब्धद्विस्वर्णपदकः) (M.A.),Ph.D.,D.Lit.


:: प्रयोजक ::

## प.पू. स.गु. स्वामी श्रीनित्यस्वरूपदासजी





**Shree Swaminarayan Temple - Sardhar**
Dist : Rajkot (Guj) 360 025
Mo : +91 76000 23716
Email : yswami108@gmail.com
Web : www.sardhardham.com

॥ श्रीः ॥

श्रीमन्महोपाध्यायभर्तृहरिकृतं

# वा क्य प दी य म्

## प्रथमं काण्डम्

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेर्[1]थभावेन प्रक्रिया जगतो यतः ॥१॥

एकमेव यदाम्नातं भिन्नं शक्ति[2]व्यपाश्रयात् ।
अपृथक्त्वेपि शक्तिभ्यः पृथक्त्वेन[3] च वर्तते ॥२॥

अव्याहतकलां[4] यस्य कालशक्तिमुपाश्रिताः ।
जन्मादयो विकाराः षड् भावभेदस्य योनयः ॥३॥

एकस्य सर्वबीजस्य यस्य चेयमनेकधा ।
भोक्तृभोक्तव्यरूपेण भोगरूपेण च स्थितिः ॥४॥

प्राप्त्युपायोनुकारश्च तस्य वेदो महर्षिभिः ।
एकोप्यनेकवर्त्मेव समाम्नातः पृथक्पृथक् ॥५॥

भेदानां बहुमार्गत्वं कर्मण्येकत्र चाङ्गता ।
शब्दानां यतशक्तित्वं तस्य शाखासु दृश्यते ॥६॥

स्मृतयो बहुरूपाश्च दृष्टादृष्टप्रयोजनाः ।
तमेवाश्रित्य लिङ्गेभ्यो वेदविद्भिः प्रकल्पिताः[5] ॥७॥

तस्यार्थवादरूपाणि निश्रिताः[6] स्वविकल्पजाः ।
एकत्विनां द्वैतिनां च प्रवादा बहुधा मताः ॥८॥

सत्या[7] विशुद्धिस्तत्रोक्ता विद्यैवैकपदागमा ।
युक्ता प्रणवरूपेण सर्ववादा[8]विरोधिना ॥९॥

---

१ अ. निवर्तते. २ अ. ब. भिन्नशक्ति. ३ आ. ओ. च. ब. पृथक्त्वेनेव. ४ च. अध्याहित-कलां; ब. अव्याहताः कलाः. ५ ब. प्रकाशिताः. ६ ब. निश्रित्य; च. निश्रिताः. ७ आ. वेदविद्भिश्च तत्रोक्ता विद्यैवैका परायणम् । ८ ब. सर्ववादाविरोधिनी.

विधातुस्तस्य लोकानामङ्गोपाङ्गनिबन्धनाः ।
विद्याभेदाः प्रतायन्ते ज्ञानसंस्कारहेतवः ॥१०॥

आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः ।
प्रथमं छन्दसामङ्गं प्राहु[1]र्व्याकरणं बुधाः ॥११॥

प्राप्तरूपविभागाया यो वाचः परमो रसः ।
यत्तत्पुण्य[2]तमं ज्योतिस्तस्य मार्गोयमाञ्जसः ॥१२॥

अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम् ।
तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते ॥१३॥

तद् द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम् ।
पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते ॥१४॥

य[3]थार्थजातयः सर्वाः शब्दाकृतिनिबन्धनाः ।
तथैव लोके विद्यानामेषा विद्या परायणम् ॥१५॥

इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः ॥१६॥

अत्रातीतविपर्यासः केवलामनुपश्यति ।
छन्दस्यश्छन्दसां योनिमात्मा छन्दोमयीं तनुम् ॥१७॥

प्र[4]त्यस्तमितभेदाया यद्वाचो रूपमुत्तमम् ।
यद[5]स्मिन्नेव तमसि ज्योतिः शुद्धं वि[6]वर्तते ॥१८॥

वैकृतं समतिक्रान्ता मू[7]र्तिव्यापारदर्शनम् ।
व्यतीत्यालोकतमसी प्रकाशं यमुपासते ॥१९॥

यत्र वाचो निमित्तानि चिह्नानीवाक्षरस्मृतेः ।
शब्दपूर्वेण योगेन भासन्ते प्रतिबिम्बवत् ॥२०॥

अथर्वणामङ्गिरसां साम्नामृग्यजुषस्य च ।
यस्मिन्नुच्चावचा वर्णाः पृथ[8]क्स्थितिपरिग्रहाः ॥२१॥

---

१ आ. ओ. च. अङ्गमाहुर्व्याकरणं. २ आ. पुण्यफलं. ३ अ. ब. यथार्थं जातयः. ४ आ. ब. प्रत्यस्तमितरूपायाः ५ ब. यदग्निनेव. ६ आ. ब. प्रवर्तते. ७ अ. आ. ओ. स. मूर्तिर्व्यापार० ८ ब. ओ. पृथक्स्थितपरिग्रहाः

यदेकं प्रक्रियाभेदैर्बहुधा [1]प्रविभज्यते ।
तद् व्याकरणमागम्य परं ब्रह्माधिगम्यते ॥२२॥

नित्याः शब्दार्थसंबन्धाः [2]समाम्नाता महर्षिभिः ।
सूत्राणां सा[3]नुतन्त्राणां भाष्याणां च प्रणेतृभिः ॥२३॥

अपोद्धारपदार्था ये ये चार्थाः स्थितलक्षणाः ।
अन्[4]वाख्येयाश्च शब्दा ये ये चापि प्रतिपादकाः ॥२४॥

कार्यकारणभावेन योग्य[5]भावेन च स्थिताः ।
धर्मे ये प्रत्यये चाङ्गं संबन्धाः साध्वसाधुषु ॥२५॥

ते लिङ्गैश्च स्वशब्दैश्च शास्त्रेस्मिन्नुप[6]दर्शिताः ।
स्मृत्यर्थमनुगम्यन्ते केचिदेव यथागमम् ॥२६॥

शिष्टेभ्य आगमात्सिद्धाः साधवो धर्मसाधनम् ।
अर्थप्रत्यायनाभेदे विपरीतास्त्वसाधवः ॥२७॥

नित्यत्वे कृतकत्वे वा तेषामादिर्न विद्यते ।
प्राणिनामिव सा चैषा व्यवस्थानित्यतोच्यते ॥२८॥

नानर्थिकामिमां कश्चिद् व्यवस्थां कर्तुमर्हति ।
तस्मान्निबध्यते शिष्टैः साधुत्वविषया स्मृतिः ॥२९॥

न चागमादृते धर्मस्तर्केण व्यवतिष्ठते ।
ऋषीणामपि यज्ज्ञानं तदप्य[7]ागमपूर्वकम् ॥३०॥

धर्मस्य चा[8]व्यवच्छिन्नाः पन्थानो ये व्यवस्थिताः ।
न ताँल्लोकप्रसिद्धत्वात् कश्चित्तर्केण बाधते ॥३१॥

अवस्थादेशकालानां भेदाद् भिन्नासु शक्तिषु ।
भावानामनुमानेन [9]प्रसिद्धिरतिदुर्लभा ॥३२॥

निर्ज्ञातशक्तेर्द्रव्यस्य तां तामर्थक्रियां प्रति ।
विशिष्ट[10]द्रव्यसंबन्धे सा शक्तिः प्रतिबध्यते ॥३३॥

---

१ अ. ओ. प्रतिलभ्यते. २ ब. संबन्धास्तत्राम्नाताः. ३ अ. सानुमन्त्राणां. ४ ओ. अन्वाख्यानाश्च. ५ अ. ओ. च. स. योग्यभावेऽनवास्थिताः. ६ च. स. उपवर्णिताः ७ ब. आगमहेतुकम्. ८ स. चाप्याविच्छिन्नाः । ९ ओ. प्रतीतिरतिदुर्लभा. १० अ. विशिष्टधर्मसंबन्धे.

यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥३४॥

परेषामसमाख्येयमभ्यासादेव जायते ।
मणिरूप्यादिविज्ञानं तद्विदां नानुमानिकम् ॥३५॥

प्रत्यक्षमनुमानं च व्यतिक्रम्य व्यवस्थिताः ।
[1]पितृरक्षःपिशाचानां कर्मजा एव सिद्धयः ॥३६॥

आविर्भूतप्रकाशानाम[2]नुपप्लुतचेतसाम् ।
अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते ॥३७॥

अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा ।
ये [3]भावान् वचनं तेषां नानुमानेन बाध्यते ॥३८॥

यो यस्य स्वमिव ज्ञानं दर्शनं [4]नाभिशङ्कते ।
स्थितं प्रत्यक्षपक्षे तं कथमन्यो निवर्तयेत् ॥३९॥

इदं पुण्यमिदं पापमित्येतस्मिन् पदद्वये ।
आचण्डालं मनुष्याणाम[5]ल्पं शास्त्रप्रयोजनम् ॥४०॥

चैतन्यमिव [6]यश्चायमविच्छेदेन वर्तते ।
आगमस्तमुपासीनो हेतुवादैर्न बाध्यते ॥४१॥

हस्तस्पर्शादि[7]वान्धेन विषमे पथि धावता ।
अनुमानप्रधानेन विनिपातो न दुर्लभः ॥४२॥

तस्मादकृतकं शास्त्रं [8]स्मृतिं च सनिबन्धनाम् ।
आश्रित्यारभ्यते शिष्टैः श[9]ब्दानामनुशासनम् ॥४३॥

द्वावुपादानशब्देषु शब्दौ शब्दविदो विदुः ।
एको निमित्तं शब्दानामपरोऽर्थे प्रयु[10]ज्यते ॥४४॥

---

१ ब. रक्षःपितृपिशाचानां. २ ब. अनुपद्रुत. ३ अ. ओ. येन वा वचनं. ४ च. नातिशङ्कते. ५ अ. आ. अत्र शास्त्रप्रयोजनम् । ब. समं शास्त्रप्रयोजनम् । ६ अ. ओ. पर्यायमविच्छेदेन; आ. यश्चायं गतिच्छेदेन. ७ अ. स्पर्शादिबन्धेन; ब. स्पर्शादिबाधेन विषमेप्यभिधावता । ८ ब. स्मृतिं वा. ९ अ. साधुत्वविषया स्मृतिः । १० च. ब. प्रयुज्यते इत्यस्यानन्तरम्–'अविभक्तो विभक्तेभ्यो जायतेर्थस्य वाचकः । शब्दस्तत्रार्थरूपात्मा संभेदमुपगच्छति ॥' इत्ययं श्लोकष्टीकायां पठ्यते । आदर्शहस्तलिखितेषु तु मूलकारिकास्वेव पठ्यते । 'जायते' इत्यस्य स्थाने 'ज्ञायते' इति पुण्यराजपाठः.

आत्मभेदस्तयोः केचिदस्तीत्याहुः पुराणगाः ।
बुद्धिभेदादभिन्नस्य भेदमेके प्रचक्षते ॥४५॥

अरणिस्थं यथा ज्योतिः [1]प्रकाशान्तरकारणम् ।
तद्वच्छब्दोपि बुद्धिस्थः श्रुतीनां कारणं पृथक् ॥४६॥

वितर्कितः पुरा बुद्ध्या क्वचिदर्थे निवेशितः ।
[2]करणेभ्यो [3]विवृत्तेन ध्वनिना सोनुगृह्यते ॥४७॥

नादस्य [4]क्रमजन्मत्वान्न पूर्वो [5]न परश्च सः ।
अक्रमः क्रमरूपेण भेदवानिव [6]जायते ॥४८॥

प्रतिबिम्बं यथान्यत्र स्थितं तोयक्रियावशात् ।
तत्प्रवृत्तिमिवान्वेति स धर्मः स्फोटनादयोः ॥४९॥

आत्मरूपं यथा ज्ञाने ज्ञेयरूपं च दृश्यते ।
अर्थरूपं तथा शब्दे स्वरूपं च प्रकाशते ॥५०॥

[7]आण्डभावमिवापन्नो यः क्रतुः शब्दसंज्ञकः ।
वृत्तिस्तस्य क्रियारूपा भागशो [8]लभते क्रमम् ॥५१॥

यथैकबुद्धिविषया मूर्तिराक्रियते पटे ।
मूर्त्यन्तरस्य त्रितयमेवं [9]शब्देपि दृश्यते ॥५२॥

यथा प्रयोक्तुः प्राग्बुद्धिः [10]शब्देष्वेव प्रवर्तते ।
व्यवसायो ग्रहीतॄणामेवं तेष्वेव जायते ॥५३॥

अर्थोपसर्जनीभूतानभिधेयेषु केषुचित् ।
चरितार्थान् परार्थत्वान्न लोकः प्रतिपद्यते ॥५४॥

ग्राह्यत्वं [11]ग्राहकत्वं च द्वे शक्ती तेजसो यथा ।
तथैव सर्वशब्दानामेते [12]पृथगेवस्थिते ॥५५॥

विषयत्वमनापन्नैः शब्दैर्नार्थः [13]प्रकाश्यते ।
न सत्तयैव तेर्थानामगृहीताः प्रकाशकाः ॥५६॥

---

१ अ. प्रकारान्तर० २. ब. कारणेभ्यः. ३ अ. आ. ओ. निवृत्तेन. ४ अ. क्रमजन्यत्वान्न; ब. क्रमजातत्वान्न. ५ ब. नापरश्च. ६ ब. गृह्यते. ७ आ. आढ्यंभाव; अ. ब. अण्डभाव. ८ ओ. च. ब. भजते. ९ अ. शब्दोपि. १० अ. शब्दोप्येवं. ११ अ. ग्रहणत्वं. १२ प. पृथगिव स्थिते. १३ ब. प्रतीयते; स. प्रकाशते.

[1]स्वतोऽनिर्ज्ञातरूपत्वात् किमाहेत्याभिधीयते ।
नेन्द्रियाणां प्रकाश्येर्थे स्वरूपं गृह्यते तथा ॥५७॥

भेदेनावगृहीतौ द्वौ शब्दधर्मावपोद्धृतौ ।
भेदकार्येषु हेतुत्वमविरोधेन गच्छतः ॥५८॥

वृद्ध्यादयो यथा शब्दाः स्वरूपोपनिबन्धनाः ।
आदैच्प्रत्यायितैः शब्दैः संबन्धं यान्ति संज्ञिभिः ॥५९॥

अग्निशब्दस्तथैवायमग्निशब्दनिबन्धनः ।
अग्निश्रुत्यैति संबन्धमग्निश[2]ब्दाभिधेयया ॥६०॥

यो य उच्चार्यते शब्दो नियतं न स कार्यभाक् ।
[3]अन्यप्रत्यायने शक्तिर्न तस्य प्रतिबध्यते ॥६१॥

उच्चरन् परतन्त्रत्वाद् गुणः कार्यैर्न युज्यते ।
तस्मात्तदर्थैः [4]कार्याणां संबन्धः परिकल्प्यते ॥६२॥

सामान्यमाश्रितं यद्य[5]दुपमानोपमेययोः ।
तस्य तस्योपमानेषु धर्मोन्यो व्यतिरिच्यते ॥६३॥

[6]गुणः प्रकर्षहेतुर्यः स्वातन्त्र्येणोपदिश्यते ।
तस्याश्रिताद् गुणादेव प्रकृष्टत्वं प्रतीयते ॥६४॥

तस्याभिधेयभावेन यः शब्दः समवस्थितः ।
तस्याप्युच्चारणे रूपमन्यत्तस्माद्विविच्यते ॥६५॥

प्राक् [7]संज्ञिनाभिसंबन्धात् संज्ञा रूपपदार्थिका ।
षष्ठ्याश्च प्रथमायाश्च निमित्तत्वाय कल्पते ॥६६॥

तत्रार्थवत्त्वात् प्रथमा संज्ञाशब्दाद्विधीयते ।
[8]अस्येति व्यतिरेकश्च तदर्थादेव जायते ॥६७॥

[9]स्वरूपमिति कैश्चित्तु [10]व्यक्तेः संज्ञोपदिश्यते ।
[11]व्यक्तेः कार्याणि [12]संसृष्टा जातिस्तु प्रतिपद्यते ॥६८॥

---

१ ब. च. अतोऽनिर्ज्ञात० २ अ. ओ. अग्निशब्दाभिधेययोः । ३ ओ. अर्थप्रत्यायने. ४ अ. तदर्थः कार्याणां. ५ अ. उपमानोपमे यथा (उपमानोपमेयता?) । ६ अ. स. गुणप्रकर्ष० ७ ब. संज्ञिताभिसंबन्धात्. ८ अ. ओ. स. यस्येति. ९ [अ]. ब. स्वं रूप० १० च. ब. स. व्यक्तिः संज्ञे० ११ ब. व्यक्तौ कार्याणि; अ. जातेः कार्याणि. १२ ओ. स. च. ब. संसृष्टा.

संज्ञिनीं व्यक्तिमिच्छन्ति सूत्रे[1] ग्राह्यामथापरे ।
जातिप्रत्यायिता[2] व्यक्तिः प्रदेशेषूपतिष्ठते ॥६९॥

कार्यत्वे[3] नित्यतायां वा केचिदेकत्ववादिनः ।
कार्यत्वे नित्यतायां वा केचिन्नानात्ववादिनः ॥७०॥

पदभेदेपि[4] वर्णानामेकत्वं न निवर्तते ।
वाक्येषु पदमेकं च भिन्नेष्वप्युपलभ्यते ॥७१॥

तद्[5] वर्णव्यतिरेकेण पदमन्यन्न विद्यते ।
वाक्यं वर्णपदाभ्यां च व्यतिरिक्तं न किंचन ॥७२॥

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा[6] न च ।
वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन ॥७३॥

भिन्नं दर्शनमाश्रित्य व्यवहारोनुगम्यते ।
तत्र यन्मुख्यमेकेषां तत्रा[7]न्येषां विपर्ययः ॥७४॥

स्फोटस्याभिन्नकालस्य ध्वनिकालानुपातिनः ।
ग्रहणोपाधिभेदेन वृत्तिभेदं प्रचक्षते ॥७५॥

स्वभावभेदान्नित्यत्वे ह्रस्वदीर्घप्लुतादिषु ।
प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते ॥७६॥

शब्दस्योर्ध्वमभिव्यक्तेर्वृत्ति[9]भेदं तु वैकृताः ।
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते ॥७७॥

इन्द्रियस्यैव संस्कारः शब्दस्यैवो[10]भयस्य च ।
क्रियते ध्वनिभिर्वादास्त्रयोभिव्यक्तिवादिनाम् ॥७८॥

इन्द्रियस्यैव संस्कारः समाधानाञ्जनादिभिः ।
विषयस्य तु संस्कारस्तद्गन्धप्रतिपत्तये ॥७९॥

---

१ ब. सूत्रग्राह्याम्. २ अ. जातिप्रत्यर्थिता व्यक्तिः प्रदेशेषु प्रतिष्ठते । ३ अ. आ. ओ. श्लोकार्धमिदं न पठ्यते. ४ ब. पदे भेदेपि. ५ आ. च. न वर्णव्यतिरेकेण पदमन्यच्च विद्यते । ६ ब. अवयवा इव; ओ. अवयवा न वा. ७ ब. अ. तत्रैतेषां. ८ च. उपचर्यते इत्यस्यानन्तरं- ‘ वर्णस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते । स्थितिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते ॥ ’ इत्येषा कारिका टीकायामुपलभ्यते । आदर्शहस्तालिखितेषु तु सा मूलकारिकास्वेव पठ्यते. ९ अ. वृत्तेर्भेदः ओ. वृत्तिभेदे; आ. वृत्तिभेदात् १० ओ. च. ब. उभयस्य वा.

चक्षुषः प्राप्यकारित्वे तेजसा तु द्वयोरपि ।
विषयेन्द्रिययोरिष्टः संस्कारः स क्रमो ध्वनेः ॥८०॥

स्फोटरूपाविभागेन ध्वनेर्ग्रहणमिष्यते[1] ।
कैश्चिद् ध्वनिरसंवेद्यः स्वतन्त्रोन्यैः प्रकाशितैः[2] ॥८१॥

यथानुवाकः श्लोको वा सोढत्वमुपगच्छति[3] ।
आवृत्त्या न तु स ग्रन्थः[4] प्रत्यावृत्ति[5] निरूप्यते ॥८२॥

प्रत्ययैरनुपाख्येयैर्ग्रहणानुगुणैस्तथा ।
ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते ॥८३॥

नादैराहितबीजायामन्त्येन ध्वनिना सह ।
आवृत्तपरिपाकायां बुद्धौ शब्दोवधार्यते ॥ ८४ ॥

असतश्चान्तराले याञ्छब्दा[6]नस्तीति मन्यते ।
प्रतिपत्तुरशक्तिः सा ग्रहणोपाय एव सः ॥८५॥

भेदानुकारो ज्ञानस्य वाचश्चो[7]पप्लवो ध्रुवः ।
क्रमोपसृष्टरूपा[8] वाग् ज्ञानं ज्ञेयव्यपाश्रयम्[9] ॥८६॥

यथाद्यसंख्याग्रहणमुपायः प्रतिपत्तये ।
संख्यान्तराणां भेदेपि तथा शब्दान्तरश्रुतिः ॥८७॥

प्रत्येकं व्यञ्जका भिन्ना वर्णवाक्यपदेषु ये ।
तेषामत्यन्तभेदेपि प्रकीर्णा[10] इव शक्तयः ॥८८॥

यथैव दर्शनैः पूर्वैर्दूरात्संतमसेपि वा ।
[11]अन्यथाकृत्य विषयमन्यै[12]थैव व्यवस्यति ॥८९॥

---

१ ओ. द्वयोर्ग्रहणं  २ च. प्रकल्पितः; ब. प्रकाशकः  ३ आ. स्फोटत्वमुप. ४ आ. संग्रन्थः। ५ अ प्रत्यावृत्ति न विद्यते; ब प्रत्यावृत्त्या निरूप्यते. ६ आ. शब्दो नास्तीति; अ. शब्दान्नास्तीति; आ. शब्दोनास्तीति. ७ अ. वाचकोपप्लवः. ८ ब. स. रूपाया ज्ञानं । ९ च. ब. 'व्यपाश्रयम्' इत्यस्यानन्तरम्—'ज्ञेयेन न विना ज्ञानं व्यवहारे प्रतिष्ठते । नालब्धक्रमया वाचा कश्चिदर्थोभिधीयते ॥' इतीयं कारिका टीकायां समुपलभ्यते । हस्तलिखितादर्शेषु तु मूलकारिकापाठे एव पठ्यते । प्रतिष्ठते इत्यस्य स्थाने अवतिष्ठते इति च पाठो दृश्यते । १० च. ब. संकीर्णा इव. ११ ओ. व्यज्यमानैस्तथा वाक्यैः. १२ ओ. च. ब. स. अन्यथैवाध्यवस्यति ।

व्यज्यमाने तथा वाक्ये वाक्याभिव्यक्तिहेतुभिः ।
भावावग्रहरूपेण[1] पूर्वं बुद्धिः प्रवर्तते ॥९०॥

यथानुपूर्वीनियमो विकारे क्षीरबीजयोः ।
तथैव प्रतिपत्तॄणां नियतो बुद्धिषु क्रमः ॥९१॥

भागवत्स्वपि तेष्वेवं[2] रूपभेदो ध्वनेः क्रमात् ।
निर्भागेष्वभ्युपायो[3] वा भागभेदप्रकल्पना[4] ॥९२॥

अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता ।
कैश्चिद्व्यक्तय[5] एवास्या ध्वनित्वेन प्रकल्पिताः ॥९३॥

अविकारस्य शब्दस्य निमित्तैर्विकृतो ध्वनिः ।
उपलब्धौ निमित्तत्वमुपयाति प्रकाशवत् ॥९४॥

न चानित्येष्वभिव्यक्तिर्नियमेन व्यवस्थिता ।
आश्रयैरपि नित्यानां जातीनां व्यक्तिरिष्यते ॥९५॥

देशादिभिश्च संबन्धो दृष्टः कायवतामिह[6] ।
देशभेदविकल्पेपि न भेदो ध्वनिशब्दयोः ॥९६॥

ग्रहणग्राह्ययोः सिद्धा योग्यता नियता यथा ।
व्यङ्ग्यव्यञ्जकभावेन तथैव स्फोटनादयोः ॥९७॥

सदृशग्रहणानां[7] च गन्धादीनां प्रकाशकम् ।
निमित्तं नियतं लोके प्रतिद्रव्यमवस्थितम् ॥९८॥
प्रकाशकानां भेदांश्च[8] प्रकाश्योर्थोनुवर्तते ।
तैलोदकादिभेदे तत्प्रत्यक्षं[9] प्रतिबिम्बके ॥९९॥

विरुद्धपरिमाणेषु वज्रादर्शतलादिषु[10] ।
पर्वतादिसरूपाणां भावानां नास्ति संभवः ॥१००॥

तस्मादभिन्नकालेषु वर्णवाक्यपदादिषु ।
वृत्तिकालः स्वकालश्च नादभेदाद्विभज्यते[11] ॥१०१॥

---

१ च. ब. भागावग्रह० ओ. भावाग्रहणरूपेण. २ ब. एवं रूपभेदो. ३ अ. ब. अप्युपायो वा. ४ च. ब. स. प्रकल्पनम्. ५ अ. केचिद्व्यक्तयः. ६ अ. च. कायवतामपि । ७ अ. सदृशग्रहणानीव. ८ आ. भेदानां प्रकाश्योर्थो. ९ भेदेन प्रत्यक्षं. १० आ. नखादिषु; प. जलादिषु. ११ आ. विभिद्यते; प. विभाव्यते.

य: संयोगविभागाभ्यां करणैरुपजन्यते ।
स स्फोटः शब्दजाः शब्दा ध्वनयोन्यैरुदाहृताः ॥१०२॥

अल्पे महति वा शब्दे स्फोटकालो न भिद्यते ।
परस्तु शब्द[1]संतानः प्रच[2]यापचयात्मकः ॥१०३॥

दूरात् प्रभेव दीपस्य ध्वनिमात्रं तु लक्ष्यते ।
घण्टादीनां च शब्देषु व्यक्तो भेदः स दृश्यते ॥१०४॥

द्रव्याभिघातात् प्रचितौ भिन्नौ दीर्घप्लुतावपि ।
कम्प[3]रूपेण ते जाता नादा वृत्तेर्विशेष[4]काः ॥१०५॥

अनवस्थितकम्पेपि क[5]रणे ध्वनयोपि ते ।
स्फोटादेवोपजायन्ते ज्वाला ज्वालान्तरादिव ॥१०६॥

वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते ।
कैश्चिद्दर्शनभेदो हि प्रवादेष्वनवस्थितः ॥१०७॥

लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्तिना ।
स्था[6]नेष्वभिहतो वायुः शब्दत्वं प्रतिपद्यते ॥१०८॥

तस्य कारणसामर्थ्याद्वेगप्रच[7]यधर्मणः ।
संनिपाताद्विभज्यन्ते सारवत्योपि मूर्तयः ॥१०९॥

अणवः सर्वशक्तित्वाद्भेदसंसर्गवृत्तयः ।
छायातप[8]तमःशब्दभावेन परिणामिनः ॥११०॥

स्वशक्तौ व्यज्यमानायां प्रयत्नेन समीरिताः ।
अभ्राणीव प्रचीयन्ते शब्दाख्याः परमाणवः ॥१११॥

अथायमा[9]न्तरो जातः सूक्ष्मो वागात्मनि स्थितः ।
व्य[10]क्तये स्वस्य रूपस्य शब्दत्वेन वि[11]वर्तते ॥११२॥

---

१ अ. शब्दसंघातान्. २ आ. प्रचयोपप्लवात्मकः. ३ ओ. च. ब. कम्पे तूपरते जाताः. ४ अ. विशेषतः. ५ अ. करणे ध्वनयोपरे. ६ अ. ओ. स्थानेष्वपिहितः. ७ आ. ब. प्रचयधर्मिणः. ८ अ. नभःशब्द. ९ आ. च. आन्तरो ज्ञाता; ब. अथेदमान्तरं ज्ञानं सूक्ष्मवागात्मना स्थितम् । व्यजने स्वस्य रूपस्य; आ. अथायमान्तरो ज्ञाता सूक्ष्मरागात्मनि स्थितः । व्यक्तो यस्तस्य. १० अ. ओ. व्यक्तो व्यक्तस्य रूपस्य. ११ ब. निवर्तते.

स[1] मनोभावमापद्य तेजसा पाकमागतः ।
वायुमाविशति प्राणमथासौ समुदीर्यते ॥११३॥

अन्तःकरणतत्त्वस्य वायुराश्रयतां गतः ।
तद्धर्मेण समाविष्टस्तेजसैव विवर्तते ॥११४॥

विभजन्[2] स्वात्मनो ग्रन्थीन् श्रुतिरूपैः पृथग्विधैः ।
प्राणो वर्णानभिव्यज्य वर्णेष्वेवोपलीयते ॥११५॥

अजस्रवृत्तिर्यः शब्दः सूक्ष्म[3]त्वान्नोपलभ्यते ।
व्यजनाद्वायुरिव स स्वनिमित्तात्प्रतीयते ॥११६॥

तस्य प्राणे च या शक्तिर्या च बुद्धौ व्यवस्थिता ।
विवर्तमाना स्थानेषु सैषा भेदं प्रपद्यते ॥११७॥

शब्देष्वेवाश्रिता शक्तिर्विश्वस्यास्य निबन्धनम्[4] ।
यन्नेत्रः[5] प्रतिभात्मायं भेदरूपः प्रतीयते ॥११८॥

षड्जादिभेदः शब्देन व्याख्यातो रूप्यते यतः ।
तस्मादर्थविधाः सर्वाः शब्द[6]मात्रासु निश्रिताः[7] ॥११९॥

शब्द[8]स्य परिणामोयमित्याम्नायविदो विदुः ।
छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्तत[9] ॥१२०॥

इतिकर्तव्यता लोके सर्वा शब्दव्यपाश्रया ।
यां पूर्वाहितसंस्कारो बालोपि प्रतिपद्यते ॥१२१॥

आद्यः करणविन्यासः प्राणस्योर्ध्वं समीरणम्[10] ।
स्थानानामभिघातश्च न विना शब्दभावनाम् ॥१२२॥

---

१ आ. ओ. स मनोभावमित्यारभ्य द्वौ श्लोकौ न पठ्येते; अ. समताभावमापाद्य. २ च. ब. विभज्य. ३ ब. सूक्ष्मत्वाच्चोपलभ्यते. ४ अ. निबन्धनी. ५ अ. आ. ओ. यत्ने तु प्रतिभात्मायं. ६ ब. शब्दमात्राः सुनिश्रिताः ७ अ. निश्रिताः. ८ अ. छन्दमास्यपरिणामोयमित्याश्रयविदो विदुः । ओ. छन्दस्य परि०. ९ च. ब. 'व्यवर्तत' इत्यस्यानन्तरम् 'विभज्य बहुधात्मानं स च्छन्दस्यः प्रजापतिः । छन्दोमयीभिर्मात्राभिर्बहुधैव विवेश तम् । साध्वी वाग्भूयसी येषु पुरुषेषु व्यवस्थिता । अधिकं वर्तते तेषु पुण्यरूपं प्रजापतेः ॥ प्राजापत्यं महत्तेजस्तत् पात्रैरिव संवृतम् । शरीरभेदे विदुषां स्वां योनिमुपधावति ॥ यदेतन्मण्डलं भास्वद्धाम चित्रस्य राधसः । तद्भावमभिसंभूय विद्यायां प्रविलीयते ॥' इति कारिकाचतुष्टयमेतट्टीकायां समुपलभ्यते । हस्तलिखितादर्शेषु तु मूलकारिकापाठ एव पठ्यते । १० अ. ऊर्ध्वसमीरणम्.

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥१२३॥

वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती ।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ॥१२४॥

सा[1] सर्वविद्याशिल्पानां कलानां चोपबन्धनी ।
तद्वशा[2]दपि निष्पन्नं सर्वं वस्तु विभज्यते ॥१२५॥

सैषा संसारिणां संज्ञा बहिरन्तश्च वर्तते ।
तन्मात्रा[3]मनतिक्रान्तं[4] चैतन्यं सर्वजातिषु[5] ॥ १२६ ॥

अर्थक्रियासु वाक् सर्वान्[6] समीहयति देहिनः ।
तदुत्क्रान्तौ विसंज्ञोयं[7] दृश्यते काष्ठकुड्यवत्[8] ॥ १२७ ॥

प्रविभागे[9] यथा कर्ता तथा[10] कार्ये प्रवर्तते ।
अविभागे तथा सैव कार्यत्वेनावतिष्ठते ॥ १२८ ॥

स्वमात्रा परमात्रा वा श्रुत्या प्रक्रम्यते[11] यथा ।
तथैव रूढतामेति तया ह्यर्थो[12] विधीयते ॥ १२९ ॥

अत्यन्तमतथाभूते निमित्ते श्रुत्युपाश्रयात्[13] ।
दृश्यते[14]ऽलातचक्रादौ वस्त्वाकारनिरूपणा ॥ १३० ॥

---

१ अ. ओ. या सर्व॰. २ ओ. च. अभिनिष्पन्नं; ब. अभिनिष्पत्तौ. ३ च. ब. तन्मात्रामप्यति॰. ४ ब. अतिक्रान्ते. ५ ब. सर्वजन्तुषु. ६ ओ. ब. सर्वा समीहयति. ७ अ. विसंज्ञेयं. ८ च. ब. काष्ठकुड्यवदित्यस्यानन्तरं —‘ भेदोद्ग्राहविवर्तेन लब्धाकारपरिग्रहा । आम्नाता सर्वविद्यासु वागेव प्रकृतिः परा ॥ एकत्वमनतिक्रान्ता वाङ्नेत्रा वाङ्निबन्धनाः । पृथग्वदवभासन्ते वाग्विभागा गवादयः ॥ षड्द्वारां षडधिष्ठानां षट्प्रबोधां षडव्ययाम् । ते मृत्यु-मतिवर्तन्ते ये वै वाचमुपासते ॥ ’ इति श्लोकत्रयं, ‘ अवतिष्ठते ’ इत्यस्यानन्तरं ‘ प्रविभज्यात्मना-त्मानं सृष्ट्वा भावान् पृथग्विधान् । सर्वेश्वरः सर्वमयः स्वप्ने भोक्ता प्रवर्तते ॥ ’ इति श्लोकः, तथा च ‘ अमृतमश्नुते ’ इत्यस्यानन्तरं ‘ प्राणवृत्तिमातिकान्ते वाचस्तत्त्वे व्यवस्थितः । क्रमसंहार–( कूर्मसंहार ? ) योगेन संहृत्यात्मानमात्मनि ॥ वाचः संस्कारमाधाय वाचं ज्ञाने निवेश्य च । विभज्य बन्धनान्यस्याः कृत्वा तां छिन्नबन्धनाम् ॥ ज्योतिरान्तरमासाद्य छिन्नग्रन्थिपरिग्रहः । कारणज्योतिषैकत्वंछित्त्वा ग्रन्थीन् प्रपद्यते ॥ ’ इति श्लोकत्रयं टीकायां समुपलभ्यन्ते । हस्तलिखितादर्शेषु तु मूलकारिकास्वेवैते श्लोकाः पठ्यन्ते. ९ अ. ओ. अविभागे यथा कर्ता. १० ब. तथा कार्ये. ११ अ. आ. प्रक्रमते. १२ अ. अर्थे विधीयते. १३ अ. भूत्युपाश्रयात् ; ब. श्रुत्यपाश्रयात् । १४ अ. ओ. दृश्यते वातचक्रादौ.

अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम् ।
प्राहुर्महान्तमृषभं येन [1]सायुज्यमश्नुते ॥ १३१ ॥

तस्माद्यः शब्दसंस्कारः सा सिद्धिः परमात्मनः ।
तस्य [2]प्रवृत्तितत्त्वज्ञस्तद् ब्रह्मामृतमश्नुते ॥ १३२ ॥

न जात्वकर्तृकं [3]कश्चिदागमं प्रतिपद्यते ।
बीजं सर्वागमापाये [4]त्रय्येवातो व्यवस्थिता ॥ १३३ ॥

अस्तं यातेषु वादेषु कर्तृष्वन्येषु [5]सत्स्वपि ।
[6]श्रुतिस्मृतिगतं धर्मं लोको न व्यतिवर्तते ॥ १३४ ॥

ज्ञाने स्वाभाविके [7]नार्थः शास्त्रैः कश्चन विद्यते ।
धर्मो ज्ञानस्य हेतुश्चेत्तस्याम्नायो निबन्धनम् ॥ १३५ ॥

वेदशास्त्राविरोधी च तर्कश्चक्षुरपश्यताम् ।
रूपमात्राद्धि वाक्यार्थः केवलान्नावतिष्ठते ॥ १३६ ॥

[9]सतोऽविवक्षा [10]पारार्थ्यं व्यक्तिरर्थस्य लैङ्गिकी ।
इति न्यायो बहुविधस्तर्केण प्रविभज्यते ॥ १३७ ॥

शब्दानामेव सा [11]शक्तिस्तर्को यः पुरुषाश्रयः ।
[12]स शब्दानुगतो न्यायो नागमेष्वनिबन्धनः[13] ॥ १३८ ॥

रूपादयो यथा दृष्टाः प्रत्यर्थं यतशक्तयः ।
शब्दास्तथैव दृश्यन्ते विषापहरणादिषु ॥ १३९ ॥

यथैषां तत्र सामर्थ्यं धर्मेऽप्येवं [14]प्रतीयते ।
साधूनां साधुभिस्तस्माद्वाच्यमभ्यु[15]दयार्थिनाम् ॥ १४० ॥

---

१ च. ब. सायुज्यमिष्यते. २ च. ब. प्रकृतितत्त्वज्ञः. ३ ब. कंचित्. ४ ओ. ब. त्रय्येवादौ. ५ च. ब. अन्येष्वसत्स्वपि. ६ च. श्रुतिस्मृत्युदितं. ७ अ. ओ. कोर्थः. ८ अ. तस्यास्त्रय्या निबन्धनम्; ब. तत्राम्नायो निबन्धनम्. ९ अ. यतोऽविवक्षा. १० अ. वागर्था व्यक्ति० ११ अ. शक्तिर्यत्कार्यः. १२ च. शब्दाननुगतो न्यायो नागमेष्वनिबन्धनः. १३ च. ब. ‘अनिबन्धनः’ इत्यस्यानन्तरं ‘यदुदुम्बरवर्णानां घटीनां मण्डलं महत् । पीतं न गमयेत् स्वर्गं किं तत् क्रतुगतं नयेत्’ इति भ्राजश्लोको महाभाष्ये उद्धृतष्टीकायां परिदृश्यते; हस्तलिखितादर्शेषु तु मूलपाठ एव पठ्यते. १४ च. प्रतीयताम्. १५ ब. अभ्युदयार्थिभिः.

सर्वोऽदृष्टफलानर्थानागमात् प्रतिपद्यते ।
विपरीतं च सर्वत्र शक्यते [1]वक्तुमागमे ॥ १४१ ॥

साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः ।
अविच्छेदेन शिष्टा[2]नामिदं स्मृतिनिबन्धनम् ॥ १४२ ॥

वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम् ।
अनेकतीर्थभेदायास्त्रय्या वाचः परं पद[3]म् ॥ १४३ ॥

तद्विभागाविभागाभ्यां क्रियमाणमवस्थितम् ।
स्वभावज्ञैश्च भावानां दृश्यन्ते शब्दशक्तयः ॥१४४॥

अनादिमव्यवच्छिन्नां श्रुतिमाहुरकर्तृकाम् ।
शिष्टैर्निबध्यमाना तु न व्यवच्छिद्यते स्मृतिः ॥१४५॥

[4]अविभागाद्विवृत्तानामभिख्या स्वप्नवच्छ्रुतौ ।
भावतत्त्वं तु विज्ञाय लिङ्गेभ्यो विहिता स्मृतिः ॥१४६॥

कायवाग्बुद्धिविषया ये मलाः समवस्थिताः ।
चिकित्सालक्षणाध्यात्मशास्त्रैस्तेषां विशुद्धयः ॥१४७॥

शब्दः संस्कारहीनो यो गौरिति प्रयुयुक्षिते ।
तमपभ्रंशमिच्छन्ति विशिष्टार्थनिवेशिनम् ॥१४८॥

---

१ अ. वक्तुमागते. २ अ. इदं व्याकरणं धनम्. ३ च. ब. परं पदमित्यस्यानन्तरम् — "गौरिव प्रक्षरत्येका रसमुत्तमशालिनी । दिव्यादिव्येन रूपेण भारती गौः शुचिस्मिता ॥ एतयोरन्तरं पश्य सूक्ष्मयोः स्पन्दमानयोः । प्राणापानान्तरे नित्यमेका सर्वस्य तिष्ठति ॥ अन्या त्वापूर्यमाणैव विना प्राणेन वर्तते । जायते हि ततः प्राणो वाचमाप्याययन् पुनः ॥ प्राणेनाप्यायिता सेयं व्यवहारनिबन्धना । सर्वस्योच्छ्वासमासाद्य न वाग्वदति कर्हिचित् ॥ घोषिणी जातनिर्घोषा अघोषा च प्रवर्तते । तयोरपि च घोषिण्योर्निर्घोषैव गरीयसी ॥ स्थानेषु विधृते वायौ कृतवर्णपरिग्रहा । वैखरी वाक् प्रयोक्तॄणां प्रणवाग्निनिबन्धिनी ॥ केवलं बुद्ध्युपादाना क्रमरूपानुपातिनी । प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्तते ॥ अविभागात्तु पश्यन्ती सर्वतः संहृतक्रमा । स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनुयायिनी ॥ सेयमाकीर्यमाणापि नित्यमागन्तुभिर्मलैः । अन्त्या कलेव सोमस्य नात्यन्तमभिभूयते ॥ तस्यां दृष्टस्वरूपायामधिकारो निवर्तते । पुरुषे षोडशकले तामाहुरमृतां कलाम् ॥ प्राप्तोपरागरूपा सा विप्लवैरनुषिङ्गिभिः । वैखरी सत्त्वमात्रैव गुणैर्न व्यवकीर्यते ॥" इत्येकादश श्लोकाष्टीकायां दृश्यन्ते, हस्तलिखितादर्शेषु तु मूलश्लोकपाठ एव पठ्यन्ते । ४ अ. ओ. ब. अविघातात्.

[1]अस्वगोण्यादयः शब्दाः साधवो विषयान्तरे ।
निमित्तभेदात्सर्वत्र साधुत्वं च व्यवस्थितम् ॥१४९॥

ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः ।
तादात्म्यमुपगम्येव शब्दार्थस्य प्रकाशकाः ॥१५०॥

[2]न शिष्टैरनुगम्यन्ते पर्याया इव साधवः ।
[3]न यतः स्मृतिशास्त्रेण तस्मात्साक्षादवाचकाः ॥१५१॥

अम्बाम्बेति यथा बालः शि[4]क्षमाणोऽपभाषते ।
अव्यक्तं तद्विदां तेन [5]व्यक्ते भवति निश्चयः ॥१५२॥

एवं साधौ प्रयोक्तव्ये यो[6]ऽपभ्रंशः प्रयुज्यते ।
तेन साधुव्यवहितः कश्चिदर्थोऽभिधीयते ॥१५३॥

पारम्पर्यादप[7]भ्रंशा वि[8]गुणेष्वभिधातृषु ।
[9]प्रसिद्धिमागता ये[10]न तेषां साधुरवाचकः ॥१५४॥

दैवी वा[11]ग्व्यवकीर्णेयमशक्तैरभिधातृभिः ।
अनित्यदर्शिनां त्वस्मिन् वादे बुद्धिविपर्ययः ॥१५५॥

उभयेषा[12]मविच्छेदेऽप्यन्यशब्दविवक्षया ।
योऽन्यः प्रयुज्यते शब्दो न सोऽर्थस्याभिधायकः ॥१५६॥

**इति श्रीमन्महोपाध्यायभर्तृहरिकृते वाक्य[13]पदीये आगमसमुच्चयः प्रथ[14]मः काण्डः ॥**

---

१ अ. अथ गोण्यादयः; ओ. यथा गोण्यादयः. २ अ. विशिष्टैः; आ. ते शिष्टैः. ३ च. ते यतः. ४ अ. च. शिक्षमाणः प्रभाषते; ओ. न व्यक्तं. ५ अ. व्यक्तो भवति; ओ. व्यक्तेर्भवति. ६ ब. योपशब्दः. ७ अ. अपभ्रंशो. ८ ब. निर्गुणेष्वाभिधातृषु. ९ अ. प्रसिद्धिमागतो. १० आ. येषां; ओ. च. येषु; ब. ये तु. ११ च. व्यतिकीर्णेयम्. १२ च. अविच्छेदादन्य. १३ अ. वाक्यप्रदीपे. १४ च. ब. प्रथमं काण्डम् ॥